विभागं वो नमो नमो वृद्धि वृद्धि भिये तथा अमुकगोत्राणं अस्मत्पितृपितामहप्रपितामहानां अमुकदेव अमुकदेवानां नांदीमुखानां इदमासनं वो नमो नमो वृद्धि वृद्धिभिये तथा अमुकगोत्राणं अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकदेवर अमुकदेवानां सपत्नीकानां नांदीमुखानां इदमासनं यथा विभागं वो नमो नमो वृद्धि वृद्धिभिये क्रमेण पूजनं अत्र सुगंधपवित्रपुष्पाद्दत्ताः ॐ समस्तमयः प्रतिहिताः शरीरेसप्तरक्षंति सदमप्रमादं सस्वापः स्वपतो लोकमीयुस्तत्र जा... गृतो ऽस्वप्नजो सत्रसदौ च देवौ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नमः नांदीमुखीभ्यो मातृपितामहीप्रपितामहीभ्यो नमः नांदीमुखेभ्यः पितृपितामहप्रपितामहेभ्यो नमः नांदीमुखेभ्यो मा

१
८

- Title – अज्ञात
- Accession No – Title –
- Folio No/ Pages –
- Lines-
- Size
- Substance Paper –
- Script Devanagari
- Language – संस्कृत
- Period – ~~विभागंवो नमो~~
- Begining – विभागं वो नमो नमो वृद्धिवृद्धिभिः
- End – ओं मरायुष्मान्सवनस्पतिभिरायुष्मंतं ... नत्वायुषायुष्मंतं करोमि।
- Colophon-
- Illustrations -
- Source -
- Subject - मंन्त्र संहिता
- Revisor -
- Author -
- Remarks- अपूर्ण

विभागं वो नमो नमो वृद्धिसिद्धिप्रिये तथा अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां
अमुकदेव अमुकदेवानां नांदीमुखानां इदमासनं वो नमो नमो वृद्धिसिद्धिप्रिये तथा अमु
कगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकदेव २ अमुकदेवानां
सपत्नीकानां नांदीमुखानां इदमासनं युग्मा विभागं वो नमो नमो वृद्धिसिद्धिप्रिये क्रमेण
पूजनं अत्र सुगंधपवित्रपुष्पाक्षताः ॐ सप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षंति
सदमप्रमादं सप्तापः स्वपतो लोकमीयुस्तत्र जागृतः ॥ श्लो० ८१ अस्वप्नजौ सत्रसदौ च दे
वौ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नमः नांदीमुखीभ्यो मातृपितामहीप्रपि
तामहीभ्यो नमः नांदीमुखेभ्यः पितृपितामहप्रपितामहेभ्यो नमः नांदीमुखेभ्यो मा

कीदेवीनांनांदीमुखीनां तथा अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकदेव २ अमुकदेवानांनांदीमुखानां तथा अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकदेव २ अमुकदेवानां सपत्नीकानांनांदीमुखानां सत्यवसुसंज्ञकविश्वेदेवाः पूर्वकं संकल्पविधिनाना अमान्नेन आभ्युदयिकश्राद्धं करिष्ये वो नमो नमो नमो नांदीमुखिभ्यः पितृभ्यः आसनदानं पूर्वतत्र उत्तरतः आवासजलपवदूर्वांकुराणि गृहीत्वा अद्येह अमुकगोत्रास्मन्मातृपितामह्यादि त्रयश्राद्धसंबंधिनां तथा अमुकगोत्रास्मत्पित्रादित्रयश्राद्धसंबंधिनां तथा अमुकगोत्रास्मन्मातामहादित्रयश्राद्धसंबंधिनां सत्यवसुसंज्ञकानां विश्वेषां देवानां आभ्युदयिकश्राद्धे इदमासनं यथाविभागं वो नमो नमो नांदीमुखेभ्यः पितृभ्यः तथा अमुकगोत्राणां अस्मन्मातृपितामहीप्रपितामहीनां अमुकीदेवी २ अमुकीदेवीनां नांदीमुखीनां इदमासनं यथा

मामलसमुद्भव ॥ इमां मया कृतां पूजां गृहाण सुरसत्तम ॥ आसनं ॥ नानारत्न
समायुक्तं मुक्ताहारैर्विभूषितं ॥ स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यतां ॥ पाद्यं ॥
गौरीप्रियपन्नमस्ते ८ सुशंकरप्रियसर्वेश भक्तापापाद्यं मया दत्तं गृहाण प्रणतप्रि
य ॥ अर्घ्यं ॥ व्रतमुद्दिश्य देवेश गंधपुष्पाक्षतैर्युतं महाभाग्यं मया दत्तं स
र्वसिद्धिप्रदो भव ॥ स्नानं ॥ स्नानं पंचामृतैर्देव गृहाण गणनायक ॥ अनाथ
नाथ सर्वज्ञ गीर्वाणपरिपूजित ॥ गृह्णनोत्वा० ॥ यज्ञोपवीतं ॥ राजतं ब्रह्मसूत्रं
च कांचनस्योत्तरीयकं ॥ गृहाण चारु सर्वज्ञ भक्तानां सिद्धिदायक ॥ सिद्धिदपर्यङ्ग
गकुंधं फिगुणो गुरुभ्यलो दाताजयं ॥ पंचनखस्य भागाः ॥ हरीतकः ॥ सर्जरसः ॥ समांसि
भागैकमेकं शिलवं शिलाजं ॥ घनस्य चत्वारि पुरस्य चैको धूपो दशांगः ॥ कपि
तो मुनीन्द्रैः नमः ॥ यज्ञोपवीतं समर्पयामि ॥ यज्ञोपवीतांते आचमनं समः० ॥ वस्त्रं

का यनम
३

रक्तवस्त्रयुग्मं देवदेवांगसदृशप्रभं ॥ भक्त्या दत्तं गृहाणेदं लंबोदर हरिप्रिय ॥ हरिप्रियाय॰
वस्त्रयुग्मं सम॰ ॥ वस्त्रांते आचमनं स॰ ॥ गंधं ॥ गंधं कर्पूरसंयुक्तं दिव्यं चंदनमुत्तमं ॥ वि
लेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यतां सुरश्रेष्ठाय नमः ॥ गंधं सम॰ ॥ अक्षताः ॥ अक्षता
न्धवला देवी सुरगंधर्वपूजित ॥ सर्वदेवनमस्कार्य गृहाण मदनुग्रहात् ॥ पुष्पाणि ॥
सुगंधीनि सुपुष्पाणि मालत्यादीनि वै प्रभो ॥ मया नीतानि पूजार्थं पुष्पाणि प्रतिगृह्य
तां ॥ धूपं गणपतये नमः ॥ धूपं समर्पयामि ॥ दशांगं गुग्गुलं धूपं सुगंधं सुमनोहरं ॥ उ
मासुत नमस्तुभ्यं धूपोयं प्रतिगृह्यतां ॥ धूपं समर्पयामि ॥ गृहाण मंगलं दीपं घृतव
र्तिसमन्वितं ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥ नैवेद्यं समर्पयामि ॥ सगुडान्स
घृतान्पक्वान्मोदकान् ॥ घृतपाचितान् ॥ नैवेद्यं सफलं दत्तं ॥ गृह्यतां विघ्ननाशन ॥ इदमम
तस्वरूपं नैवेद्यं सम॰ ॥ नैवेद्यांते आचमनीयं स॰ ॥ एकं विनायकनिकटे दद्यात् ॥ दाणं

धात्रा ॥ तांबूलं ॥ पूंगीफलसमायुक्तं नागवल्लीदलैर्युतं ॥ कर्पूरादिसमायुक्तं तांबूलं प्र
तिगृह्यतां ॥ मोदकदानं ॥ दशमोदकान् भाजने संस्थाप्य संकल्पः ॥ देशकालौ संकीर्त्य ॥ अ
मुकोहं ॥ करिष्यमाण अमुककर्मणि निर्विघ्नतया कार्यसिद्ध्यर्थं कृतायाः ॥ गणपति
पूजायाः ॥ साङ्गुण्यार्थं दशमोदकान् दक्षिणां च ब्राह्मणाय दास्ये ॥ ॐ तत्सदिति
संकल्प ॥ भूमिर्दिव्यामेति अर्घ्यं दत्वा गंधादिभिः संपूज्य ॥ विघ्नेशा विप्ररूपेण गृहाण द
शमोदकान् ॥ दक्षिणाघृतताम्बूलगुडयुक्तान् ममेप्सितान् ॥ इति मंत्रः ॥ दाता विघ्ने
श्वरो देवो गृहीता सर्वविघ्नराट् ॥ तस्मादिदं मया दत्तं परिपूर्णं तदस्तु मे ॥ ॐ स्वस्तिरि
ति ब्राह्मणः ॥ प्रार्थना ॥ विनायक नमस्तुभ्यं सततं मोदकप्रिय ॥ अविघ्नं कुरु मे देव सर्वका
र्येषु सर्वदा ॥ अथ दूर्वांकुरपूजा ॥ ॐ गणाधिप नमस्तेस्तु ॥ ॐ उमापुत्र नमस्तेस्तु ॥ ॐ

-अघनाशनन: ॥ ॐ विनायकन० ॥ ॐ ईशपुत्रन० ॥ ॐ सर्वसिद्धिप्रदायकन० ॥ ॐ
एकदंतन० ॥ ॐ [illegible]भवक्रन० ॥ ॐ मूषकवाहनन० ॥ ॐ कुमारगुरवे तुभ्यं नमो
स्तु ते ॥ ॐ काण्डात्काण्डात्प्ररोहंती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण
शतेन च ॥ नीराजनं ॥ मंत्रपुष्पं समर्पये ॥ -अंबतेजोवहितेजः एकोकस्यार्पितस्वयं ॥ -आ
रार्तिकमिदं देव गृहाण मदनुग्रहात ॥ पुष्पांजलि ॥ सुमुखश्चैकदंतश्च कपिलो गज
कर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो ॥ भाल
चंद्रो गजाननः ॥ द्वादशैतानि नामानि ॥ यः पठेच्छृणुयादपि ॥ विद्यारंभे विवा
हे च ॥ प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव ॥ विघ्नस्तस्य न जायते ॥ विघ्नवल्ली
कुठाराय ॥ गणाधिपतये नमः ॥ -अविरलमदजलनिवहभ्रमरकुलानीकसेवि

चतुर्थीप
[illegible]

॥ राम ॥



6

तकपोलं ॥ अभिमतफलदातारं कामेशं गणपतिं वंदे ॥ विनायकं नमस्तु
भ्यं सततं मोदकप्रिय ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ दक्षिण
संकल्पः ॥ अद्येह अमुकोऽहं अमुक कर्मणः पूर्वांगत्वेन निर्विघ्नता
सिद्ध्यर्थं श्रीमहागणपतेः पूजनकर्मणः ॥ स्वाकुण्यार्थं इमां दक्षि
णां गणपतिप्रीतये ब्राह्मणाय ददामि ॐ तत्सत् ॥ गणानां त्वा ०॥
इति मंत्रपाठः ॥ अथ मातृकापूजा अर्चसंपादाय प्राणायामः ॥ स
र्वकर्मसु गणेशपूजानंतरं प्रधानसंकल्पं कुर्यात् ॥ अद्येह ॥ अ
मुकगोत्रः सन्नो अमुकराशिरमुकशर्माहं करिष्यमाण अमुककर्म

र्मण: ॥ हर्वंश लेन उत्तरोत्तरा । मुहमावाप्तेसकलमंगलाभिहर्द्धये श्री
परमेश्वरप्रीत्यर्थं ॥ अमुक कर्माहं करिष्ये तदंगत्वेन गणपतिसहित
गौर्यादिषोडशमातृणां यथामिलितोपचारैः पूजनं करिष्ये गोम
येन वस्त्रेण विमृश्य एतंतस्तिष्ठतिष्ठाप्य ॥ ॐ एतंते देवसवितर्य
ज्ञं प्राऽहुर्वृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिंतेन मामव ॥
मनोजूतिर्जुषतामाज्यस्य वृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञं स०
समिमंदधातु ॥ विश्वेदेवास इहमादयंतामों प्रतिष्ठ ॥ ॐ भूर्भु
वः ॥ स्वः गणपतिसहितगौर्यादिषोडशमातर इहागच्छंतु ॥ इह

॥ राम: ॥
॥ ५ ॥

नं २

तिष्टंतुसुवतिष्ठितावरदाभवंतु॥ ध्यानं॥ ॐगौरीपद्माशचीमेधासा
वित्रीविजया॥ देवसेनास्वधास्वाहामातरोलोकमातरः॥ धृतिः
पुष्टिस्तथातुष्टिरात्मदेवतयासह॥ अनेनमंत्रेणगौर्यैनमः॥ इत्या
दिनामंत्रेणच॥ आवाहनं॥ आसनं॥ पाद्यं॥ अर्घ्यं॥ ॐगौर्यैन
मः॥ पद्मायैनमः॥ शच्यैनमः॥ मेधायै०॥ सावित्र्यै०॥ विजयै०॥
जयायै०॥ देवसेनायै०॥ स्वधायै०॥ स्वाहायै०॥ मातृभ्योन०॥ लो
कमातृभ्यो०॥ धृत्यै०॥ पुष्ट्यै०॥ तुष्ट्यै०॥ आत्मनः॥ कुलदेवता

10

ये नमः॥ अर्घं [?]मनं॥ आचमनं मधुपर्कं॥ पुनराचमनीयं सम
र्पयामि॥ ...गपाद्यं लं वस्त्रं॥ वस्त्रांगमाचमनीयं॥ गंधं॥ अक्षताः
पुष्पाणि भूषणार्थं द्रव्यं॥ धूपं दीपं नैवेद्यं नैवेद्यांतमाचमनं सम
र्पये॥ वसोर्धारा॥ मातृपितृसंकल्पः॥ अद्येह अमुकगोत्रोत्पन्नो
अमुकराशिरमुकशर्माहं करिष्यमाण अमुककर्मणः॥ पूर्वांगि
त्वेन॥ उत्तरोत्तराभ्युदयावाप्तिकामः॥ सकलमंगलाभिवृद्ध्यर्थं गण
पतिसहितषोडशमातृणामनुपरिशुद्ध सर्वियर्थं वसोर्धारा॥ मातृपि
ये॥ ॐ वसोः पवित्रमसि शतधारं वसोः॥ पवि त्रमसि सहस्रधा॥ राम॥

॥६॥

रम् देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ताम्रधाराः यजमान
शिरसि तिस्रः पंचसप्तधाराः पातयेत् नीराजनं मंत्रेण जोवहिस्तेजएकीकृत्यामितपमंत्रा
रार्तिक्यमिदं देव गृहाण मदनुग्रहात् चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च त्वमेव सर्व
ज्योतींषि आरार्तिक्यं प्रतिगृह्यतां प्रार्थना गौरी पद्मा शची मेधा सावित्री विजया जया देवसे
ना स्वधा स्वाहा मातरो लोकमातरः इति धृतालीकमलेंदुसौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी वाराही घनघोरघर्घरमुखी चैंद्री च वज्रा
युधा चामुण्डा गणनाथरुद्रसहिता रक्षंतु मां मातरः दक्षिणा अद्येह अमुकगोत्रोत्पन्नो
अमुकराशिरमुकशर्माहं करिष्यमाण अमुककर्मणः सांगत्वेन उत्तरोत्तराभ्युदय

प्राप्तिकामः सकलमंगलाभिवृद्ध्यर्थं गणपतिसहितगौर्यादिषोडशमातृणां पूजायाः सा
द्गुण्यार्थं इमां दक्षिणां ब्राह्मणाय दास्ये ॐ तत्वात् मंत्रपाठः ॐ समस्तदेवाधिपालं दक्षिणायो
स्त्वत्तसा मानः आयुः प्रमोषीर्मोऽ अहं तव वीरं विदेय तव देवि संदृशि ॐ अम्बे अम्बिके अम्बा
लिके न मा नयति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीं अथासनविधिः आदौ
स्वाद्यस्थले शुभासने उदङ्मुख उपविश्याचम्य धंबुलवेदांतविदो वदंति परं प्रधानं पुरुषं
तथान्ये विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय अभीप्सितार्थसिद्ध्यर्थं
पूजितो यः सुरैरपि सर्वविघ्नहतैरेतस्मै गणाधिपतये नमः मृत्कांडादराधरं विघ्नं इति स्व
दक्षिणभागे चतुष्कोणमंडलं विधाय दूर्वादलत्रयेण आसनं आसने पात्रं पात्रे पवित्रं प
अल्कां वरधरं विघ्नं शशिवर्णं चतुर्भुजं प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशांतये नमः

विश्वेभ्यो वैस्त्रवो शन्नोदेव्याजलं ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये शंयोरभिस्रवंतु
नः पवोसीतीपर्वन् ॐ पवोसिपयसपालदेवोपवपारती: गंधपुष्पाक्षतादिक्तसौनिक्षिप्य
तेनजलेनआत्मानंप्रजासापयोसर्वो: संप्रोक्षमालनायस्व ॐ पुंडरीकाक्षायनमः ॐ अ
पवित्रः पवित्रोवासर्वावस्थांगतोपिवा यः स्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॐ देव
ताभ्योदेवताभ्योमहायोगिभ्यएवच नमः स्वाहायैस्वधायैनित्यमेवनमोनमः ॥ २ सप्तव्याधादशा
र्णेषुमृगाः कालंजरेगिरौ चक्रवाकाः शरद्वीपेहंसाः सरसिमानसेतेपिजाताः कुरुक्षेत्रेब्राह्म
णावेदपारगाः प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ श्राद्धकालेगयांध्यात्वा ध्यात्वा
देवंगदाधरं मनसाचपितॄन्ध्यात्वाततः कर्मपात्रात्सयवदूर्वाजलंगृहीत्वा ॐ सोमस्य

नो विरसि इति मंत्रेण दक्षिणकट्यां नीवीबंधनं ततो दिग्बंधः अग्निष्वात्ताः पितृगणाः प्राची
रक्षंतु मे दिशं तथा बर्हिषदः पांतु याम्यां ये पितरस्तथा प्रतीचीमाज्यपाः पांतु उदीचीमपि
सोमपाः रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः सर्वतश्चाधिपस्तेषां यमो रक्षां करो
तु मे दूर्वा रक्षंतु दितिजान् यवा रक्षंतु राक्षसान् पंक्तीश्च प्रोक्षिपो रक्षे इति पि: सर्वरक्ष
कः स्मशादिदृष्टिदोषनिवारणातान् गायत्र्या आमान्नादीनां पवित्रताकुशान् तिला दूर्वा य
वजलपाणिः देशकालौ संकीर्त्य अद्येह अमुकगोत्रोत्पन्नो अमुकशर्मा शिरमकशर्माहं
करिष्यमाण अमुककर्मणः सर्वांगत्वेन उत्तरोत्तरशास्त्रस्थावाशेसकलसंमंगलाधि
ल्हार्थं अमुकगोत्राणां अस्मन्मातृपितामहीप्रपितामहीनां अमुकीदेवी २ अमु

15

महानां अमुकदेव २ अमुकदेवानां सपत्नीकानां नांदीमुखानां कृतस्यास्य आभ्युदयिकश्राद्ध
स्य पूजाप्रतिष्ठासंगतासिद्ध्यर्थं इमां दधिशुद्धामलकनिष्क्रयिणीं दक्षिणां यथाविभागं वो नमो
अद्येह अमुकगोत्रास्मत्पित्रादित्रयपत्न्यादिसंबंधिनां तथा अमुकगोत्रास्मन्मात्रादित्रयपत्न्यादिसंबं
धिनां तथा अमुकगोत्रास्मन्मातामहादित्रयपत्न्यादिसंबंधिनां सत्यवसुसंज्ञकानां विश्वेषां दे
वानां प्रीतये कृतस्यास्य आभ्युदयिकश्राद्धस्य पूजाप्रतिष्ठासिद्ध्यर्थं इमां दधिशुद्धामलकनि
ष्क्रयिणीं दक्षिणां यथाविभागं वो नमो नमो वृद्धिर्वृद्धिप्रियै तिलकं अयं गोमुचमां ० पूजनं
यथेमां वाचं ० देवताभ्यो ३ सप्तव्याधा दशा ० तत आभ्युदयिकश्राद्धं विसर्जयेत् एतन्नांदीमु
खश्राद्धं यत्कृतं तन्न्यूनं कृतं तत्सुसंपन्नकं तत्तत् श्रीविष्णोः प्रसादात् ब्राह्मणवचनात्सर्वं परि
पूर्णमस्तु अस्तु परिपूर्णम् आसनानि उत्थाप्य नीवीं विसृज्य आचम्य ब्रह्मण्यःस्वेति पठि
त्वा इति आभ्युदयिकश्राद्धं अथ पुण्याहवाचनं चतुरः ब्राह्मणान् उत्तरमुखान् संस्थाप्य अ
र्घ्यं संस्थाप्य ब्राह्मणानायम्य सहस्रं पंगाफल हित कृत्वा अद्येह अमुकगोत्रोत्पन्नो अमु

16

कराशिरमुकशर्माहं अमुकगोत्रोत्पन्नोऽमुकराशेः पु[illegible] अमुकनामपदो अमुकगोत्रोत्पन्नायाः
अमुकराशेः पुत्र्याः अमुककर्मणः सर्वोपद्रवेनउत्तरोत्तराभ्युदयार्थं सपत्नीकस्य मंगलाभिवृ
ध्यर्थं ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तदंगतया चतुरां ब्राह्मणानां पूजनपूर्वकं वरणम
हं करिष्ये ॐ भूमिर्देवाग्रेति ब्राह्मणान् संपूज्य गंधहारं० अक्षताः संतु नमो ब्राह्मणेभ्य इति निमंत्र्ये
ब्राह्मणं संपूज्य अपां पुष्पांजलिं सपत्नीक लेगृहीत्वा भिंधास्तल पुष्पपूंगीफलद्वयैः
करिष्यमाणामुककर्मणि पुण्याहवाचनार्थं तामहत्तरौ सतोऽस्मीति ब्राह्मणाः सवैष्णवः अंज
लिं बध्वा ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनः आवः स बुध्न्या उपमा अस्य
विष्ठाः सतश्चयोनिमसतश्च विवः ॐ बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्ज
नेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रं भो ब्राह्मणा मम गृहे पुण्याहं भ
वंतो ब्रुवंतु २ ॐ पुण्याहं २ ॐ पुनंतु मा देवजनाः पुनंतु मनसा धियः पुनंतु विश्वा भूतानि जात
वेदः पुनीहि मां १ भो ब्राह्मणा मम गृहे स्वस्ति भवंतो ब्रुवंतु २ ॐ स्वस्ति २ ॐ स्वस्ति न इंद्रो वृद्ध

राम

17

तामहप्रमातामहवृद्धप्रमातामहेभ्योनमः धूपदीपौ अद्येह अमुकगोत्राणां अस्मन्मात्रादित्रयश्रा।
द्धसंबंधिनः तथा अमुकगोत्राणां अस्मत्पित्रादित्रयश्राद्धसंबंधिनः तथा अमुकगोत्राणां अस्मन्माता।
महादित्रयश्राद्धसंबंधिनः सत्यवसुसंज्ञकाविश्वेदेवा आभ्युदयिकश्राद्धे अर्चनविधौ एते।
गंधाक्षतपत्रिधूपदीपाद्योमदत्ताः यथाविभागं वोनमो० तथा अमुकगोत्रा अस्मन्मातृ।
पितामहीप्रपितामह्यः अमुकदेवी २ अमुकीदेव्यां नांदीमुखाः तथा अमुकगोत्राः अ।
स्मत्पितृपितामहप्रपितामहाः अमुकदेव २ अमुकदेवाः नांदीमुखाः तथा अमुकगोत्राः।
अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकदेव २ अमुकदेवाः सपत्नीकानांदीमुखा
आभ्युदयिकश्राद्धे आसनार्चनविधौ एते गंधाक्षतपत्रिकाः धूपदीपाद्योमदत्ताः यथावि
भागं वोनमोनमो वृद्धिवृद्धिश्रियै आचमनं दत्वा स्वपंकाचस्य अन्नाहारय सदत्तानिसादका
निकृत्वा चतुर्धाविभज्यसंपोद्यसंपज्य अद्येह अमुकगोत्र अस्मन्मात्रादित्रयश्राद्ध

संबंधिभ्यः तथा अमुकगोत्रात्सपित्नात्स्त्रिपक्षे इसंबंधिभ्यः तथा अमुकगोत्रास्मन्मातामहात्स्त्रिप
क्षाद्यसंबंधिभ्यः सत्यवसुसंज्ञकेभ्यो देवेभ्यः आभ्युदयिकश्राद्धे इदमामान्नंसोदकं घृतादिसहितंयथाविभागं वो नमो० तथा अमुकगोत्राभ्यः अस्मन्मातृपितामहीप्रपितामहीभ्यः अमुकी
देवी २ अमुकीदेवीभ्यः नांदीमुखीभ्यः इदमामान्नंसोदकं घृतादिसहितं यथाविभागं वो न० त
था अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकदेव २ अमुकदेवेभ्यः नांदीमुखे
भ्यः इदमामान्नंसोदकं घृतादिसहितंयथाविभागं वो नमो० तथा अमुकगोत्रेभ्यः अस्मन्मातामह
प्रमातामहवृद्धप्रमातामहेभ्यः अमुकदेव अमुकदेवेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः इदमा
मान्नंसोदकं घृतादिसहितंयथाविभागं वो नमो नमो द्विजविप्राय अन्न दृ जासदत्र अथपः इ
तिपयेमांवाचं० इति अमुकगोत्राणां अस्मन्मातृपितामहीप्रपितामहीनां अमुकी देवी २
अमुकीदेवीनां नांदीमुखीनां तथा अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुक
देव २ अमुकदेवानां नांदीमुखानां तथा अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमाता

राम
१०

श्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु २ भो ब्राह्म
णा मम गृहे ऋद्धिं भवंतो ब्रुवंतु ३ ॐ ऋध्यतां ३ ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता ऽअभूम दि
वं पृथिव्या ऽअध्यारुहामाविदाम देवान् स्वर्ज्योतिः ३ भो ब्रा० वृद्धिं भवंतो ब्रुवंतु ३ ॐ वृध्यतां ३ ॐ
ज्यैष्ठ्यं च म ऽआधिपत्यं च मे मन्युश्च मे भामश्च मेमश्च मे ऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च
मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पंताम् ४ भो ब्राह्मणा० श्री
रस्तु भवंतो ब्रुवंतु ३ ॐ श्रीरस्तु ३ ॐ मनसः काममाकूतिं वाचः सत्यमशीय पशूनां रूप
मन्नस्य रसो यशः श्रीः श्रयतां ४ भो ब्राह्मणा० कल्याणं भवंतो ब्रुवंतु ३ ॐ कल्याणं ३ यथेमां
वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च प्रि
यो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतां ६ भो ब्राह्मणा० शांतिं भवंतो ब्रुवं
तु ३ ॐ शांतिः ३ ॐ द्यौः शांतिरंतरिक्षं० शांतिः पृथिवी शांतिरापः शांतिरोषधयः शांति
र्वनस्पतयः शांतिर्विश्वेदेवाः शांतिर्ब्रह्म शांतिः सर्वं० शांतिः शांतिरेव शांतिः सा मा शांति

२०

रोचिषिप्रजा निदेवसवितर्दुरितानिपरासुवयद्भद्रं तन्न आसुव तिलकं कुर्यात् पुण्याहवाचनं त्रस्ताहे
स्तुपुण्याहसमृद्धिरस्तु इति पुण्याहवाचनं अथ कलशस्थापनं ईशानदिग्भागे अष्टदलं धातुमयं मृ
न्मयं वा कलशं संस्थाप्य तत्र चंदनचर्चितं विधाय चूतोदुम्बरवटोदुम्बरपल्लवान् पंचपल्लवसहितं वस्त्रावृते
न्नं कलशं स्थापयेत् ॐ महीद्यौः पृथिवीच न इमं यज्ञं मिमिक्षतां पिपृतां नो भरीमभिः इति मंत्रेण स्पर्शे
नं ॐ ओषधयः समवदंत सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि इति सप्तधा
न्यानि पवान् व्रीहीन्वा निक्षिप्य ॐ आजिघ्र कलशं मह्या त्वा विशंत्विंदवः पुनरूर्जा निवर्तस्व सानः स
हस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः इति कलशं स्थापयेत् ॐ वरुणस्योत्तंभनमसि वरु
णस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतः सदनमसि वरुणस्य ऋतसदनमा
सीद इति जलेनापूरणं अथ तीर्थोदकं ॐ पंचनद्यः सरस्वतीमपियंति सस्रोतसः सरस्वती तु
पंचधा सो देशे भवत्सरित् अथ गंधं ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीं सर्व
भूतानां तामिहोपह्वये श्रियं अथ दूर्वा ॐ कांडात्कांडात्प्ररोहंती परुषः परुषस्परि एवानो दू

राम
१२

र्वे प्रतनु सहस्रेण शतेन अथ सर्वौषधी हरिद्रा वा ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं
पुरा मनै नु बभ्रूणामहं शतं धामानि सप्त च अथ फलं ॐ याः फलिनीर्या अफला
ऽपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुंचन्त्वंहसः अथ पयः ॐ पयः पृथिव्यां पयऽओ
षधीषु पयो दिव्यन्तरिक्षे पयो धाः पयस्वतीः प्रदिशः सन्तु मह्यं अथ दधि ॐ दधिक्राव्णोऽअका
रिषं जिष्णोरश्वस्य वाजिनः सुरभि नो मुखा करत्प्रणऽआयूंषि तारिषत् अथ घृतं ॐ घृ
तवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा द्यावापृथिवी वरुणस्य धर्मणा विष्क
भिते अजरे भूरिरेतसा अथ पंचपल्लवान् ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता गोभा
ज इत्किलासथ यत्सनवथ पूरुषं अथ सप्तमृदः ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी
यच्छा नः शर्म सप्रथाः अथ पंचरत्नानि ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् दधद्रत्नानि
दाशुषे अथ हिरण्यं ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् स दाधार पृ
थिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम अथ वस्त्रं ॐ यदश्वाय वासऽउपस्तृणंत्यधीवासं
या हिरण्यान्यस्मै संदानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयंति अथ यज्ञोपवीतं ॐ युवा सुवासा

२२

पृथिवीं त्वागात् स उद्भेद्या भवति पावमानः तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः
अपवलान् कलशे निधाय ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्यो
ऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरंध्रिर्योषा जिष्णू रथे
ष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलव
त्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पतां अथ कलशोपरि पूर्णपात्रं न्यस्य ॐ पू
र्णा दर्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणावहा इषमूर्जं १० शतक्रतो अथ पा
त्रे वरुणमावाह्य ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अ
हेडमानो वरुणेह बोध्युरुशंस १० मा न आयुः प्रमोषीः अथ कलशाभिमन्त्रणं ॐ
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ऋग्वेदो यजुर्वेदः सामवेदो ह्यथर्वणः अङ्गै
श्च सहिताः सर्वे कलशं तु समाश्रिताः अथ कलशार्चनं देवदानवसंवादे मथ्यमा

राम

१२

नेमतोऽस्थौ उत्पन्नोसितत्सकुंभविधृतो विष्णुना स्वयं त्वत्तोयेसर्वतीर्थानि देवाः सर्वे त्वयि
स्थिताः त्वयितिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः शिवस्त्वयंत्वमेवासि विष्णुस्त्वंच
प्रजापतिः आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः त्वयितिष्ठंतिसर्वेपियतः कामफल
प्रदः त्वत्प्रसादादिमंयज्ञं कर्तुमीहे जलोद्भव सांनिध्यं कुरु देवेश प्रसन्नो भव सर्वदा स्थि
रो भव वीड्वंग आशुर्भव वाज्यर्वन् पृथुर्भव सुषदस्त्वमग्नेः पुरीष्यवाहणः इतिकलशस्थापनं
अथपूजा अर्घसंस्थाप्य प्राणानायाम्य देशकालौ संकीर्त्य [illegible] गोत्रः अमुकोहं
करिष्यमाणमुककर्मणि पूर्वांगत्वेन अस्मिन् कलशे वरुणं वरुणसहित आदित्यादिन
वग्रहाणां तथा अधिदेवतादीनां यथामिलितोपचारैः पूजनं करिष्ये एतेनेति प्रति
ष्ठाप्य ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं वरुणसहित आदित्यादिनवग्रहाः तथा अधि
देवतादयः इहागच्छंतु इहतिष्ठंतु सुप्रतिष्ठिता वरदा भवंतु ध्यानं ब्रह्मा मुरारिस्त्रिपुरांत
कारी भानुः शशी भूमिसुतो बुधश्च गुरुश्च शुक्रः शनिराहुकेतवः सर्वेग्रहाः शांतिकराभ

वंतु अस्मिन्कलशे ब्रह्मवरुणसहित आदित्यादिनवग्रहेभ्यो नमः ध्यानं समर्पयामि नाममंत्रैः
आवाहनं आसनं पाद्यं अर्घ्यं ब्रह्मणे नमः वरुणाय० आदित्याय० सोमाय० भौमाय० बुधाय०
बृहस्पतये० शुक्राय० शनैश्चराय० राहवे० केतुभ्यो० अधिदेवताभ्यो० प्रत्यधिदेवताभ्यो०
विनायकादिपंचदेवताभ्यो० इंद्रादिदशदिक्पालेभ्यो० पाद्यं अर्घं स्नानं आचमनं वस्त्रं वस्त्रां
गमाचमनं यज्ञोपवीतं यज्ञोपवीतांगमाचमनं गंधं अक्षताः पुष्पाणि० धूपं० दीपं नैवेद्यं
नैवेद्यांगमाचमनं समर्पयामि ताम्बूलं दक्षिणां समर्प्य पुष्पांजलिं दद्यात् व्यास
उवाच जपाकुसुमसंकाशं काश्यपेयं महाद्युतिं तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरं
॥१॥ दधिशंखतुषाराभं क्षीरोदार्णवसंभवं नमामि शशिनं सोमं शंभोर्मुकुटभूषणं ॥२॥ धर
णीगर्भसंभूतं विद्युत्कांचनसन्निभं कुमारं शक्तिहस्तं च मंगलं प्रणमाम्यहं ॥३॥ प्रियं
गुकलिकाश्यामं रूपेणाप्रतिमं बुधं सौम्यं सर्वगुणोपेतं नमामि
घाशिनं हनं ॥४॥ देवतानामृषीणां च गुरुं कांचनसन्निभं बंधुभूतं त्रिलोकीनां च

राम:

र्श्व पार्श्वे गदा ॰ रक्षतु दक्षिणे चक्रसुदर्शनः ११ उपेन्द्रः पातु ब्रह्माणं भा ग्र पा पातु वामनः अ
च्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षजः १२ कृष्णो रक्षतु सामानि अथर्वाणं च माधवः उपविष्टा
स्तु ये विप्रास्ते नु रुद्धेन रक्षिताः १३ यजमानं सपत्नीकं पुंडरीकविलोचनः रक्षाहीनं तु यत्स्थानं त
त्सर्वं रक्षताद्धरिः १४ वेदमंत्रैस्तु कर्त्तव्या रक्षा गृह्यैस्तु सर्षपैः कृत्वा पोटलिकां हवे वध्नीयाद्द
क्षिणे करे १५ रक्षा होम गायत्री ॐ गणानां त्वा गणपतिं ॐ प्रियाणां हवामहे प्रियाणां त्वा प्रिय
पतिं॰ हवामहे निधीनां त्वा निधीपतिं॰ हवामहे वसो मम आहमजानि गर्भधमा त्वम
जासि गर्भधम् ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः स नः पर्षदति दु
र्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॐ न तद्रक्षा॰ सि न पिशाचास्तरंति देवानामो
जः प्रथमजं ह्येतत् यो बिभर्ति दाक्षायणं॰ हिरण्यं॰ स देवेषु कृणुते दीर्घमायुः
स मनुष्येषु कृणुते दीर्घमायुः यदाबध्नन्दाक्षायणा हिरण्यं॰ शतानीकाय सुमनस्यमाना
तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासं रक्षोहणं वलगहनं॰ वै वैष्णवी

मिदमहंतंवलगमुत्किरामि यम्मेनिष्ट्योयममात्यो निचखानेदमहंतंवलगमुत्किरामि यम्मेसमा
नोयमसमानोनिचखानेदमहंतंवलगमुत्किरामि यम्मेसबंधुर्यमसबंधुर्निचखानेदमहंतंव
लगमुत्किरामि यम्मेसजातोयमसजातोनिचखानोत्कृत्यांकिरामि स्वराडसिसपत्नहासत्रर
डस्यभिमातिहा जनराडसिरक्षोहासर्वराडस्यमित्रहा रक्षोहणोवोवलगहनः प्रोक्षामि
वैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवोवलगहनोवस्तृणामिवै
ष्णवान्रक्षोहणोवांवलगहनाऽउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्यूहामिवैष्णवीवै
ष्णवमसिवैष्णवाःस्थ मानः ५८० सोऽग्नरक्षोघ्नोधृतिः ध्रुवंमर्तस्यरक्षोहणेवलगघ्नेस्वते ध्रुवसुव
५८० रक्षः ध्रुवासुवाऽध्वरातयोनिषष्ठम् ५८० रक्षोनिष्टप्ताऽध्वरातयः ऊर्वंतरिक्षमन्वेमिरक्षोहावि
ष्वद्धिकिरमियोनिमयोहतेऽग्नेरक्ष्यमासदत् रयिमिमंजैरयिमिमंच्य प्रतिष्ठा ॐ भूर्भुवः
स्वः रक्षेसुप्रतिष्ठितावरदाभव कलशंस्थापयेत् येनबद्धोबलीराजा दानवेंद्रोमहाबलः ते
नत्वामपिबध्नामि रक्षेमाचलमाचल १ त्वंजीवशरदांशतं ... पाहिमाम् ... रक्षातोकं

२४

तन्मना रक्षां सुरक्षां भूयात् २ आभ्यां मंत्राभ्यां कर्मांते दक्षिणस्ते वध्नीयात् इति रक्षाविधानं अ
थ घृतछाया घृतछायापात्रे चतुःस्थाने सुगंधाक्षतैः संदस्य कुशैर्वद्दमाणमंत्रैरभिमंत्रये
त् आज्यं परमयज्ञीयमाज्यं तेजोमयो निधि आज्यं हि सर्वदेवानां प्रियमाज्ये स्थितं जगत् तस्
ज्यवीक्षणे भक्त्या कृते मंगलमाप्नुयात् दुःस्वप्नं दुर्निर्मितं च विघ्नो घोर नश्यते ध्रुवं २ तेजः प्रज्ञा च
वीर्यं [illegible] च वलं चायुः प्रवर्तते पुण्यं संसागरांश्च भवे
दस्य च ईक्षितं ३ ज्ञात्वा वाज्ञानतो वापि मनो वाक्काय कर्मभिः कृतं पत्पातकं तन्मे घृतस्पर्श
नेन श्यतु आज्यं तेजः समुद्दिष्टं आज्यं पापहरं स्मृतं आज्येन देवास्तृप्यंति आज्ये लोकाः
प्रतिष्ठिताः ५ दिव्यं भौमं चांतरिक्षं यत्ते कल्मषमागतं तत्सर्वमाज्य संस्पर्शात्त्वरणाशमुप
गच्छतु ६ इति दूर्वांकुरत्रयेणाभिमंत्र्य अद्येह अमुकोहं करिष्यमाण अमुककर्मणि स
कीभुदयप्राप्त्यर्थं श्रीभगवतो मत्युंजयस्य प्रीत्यर्थं आज्यावेक्षणं करिष्ये इति ॐ ध्रुवा
सि ध्रुवो यं यजमानो स्मिन्नायतने प्रजया पशुभिर्भूयात् घृतेन द्यावापृथिवी पूर्येथा

मिं इत्यस्य छिद्रं स्ति विष्वजनस्य छादनया ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवा
नामनाधृष्टं देवयजनमसि इति अवेक्ष्य अद्येह अमुकोहं करिष्यमाण अमुककर्मणि स
र्वाभ्युदयप्राप्तये इदं अवलोकितं आज्यं ताम्रपात्रस्थमस्तु जय देवतं ब्राह्मणा वदन्तु ॐ तत्स
त् कामधेनोः समुद्भूतं देवानामुत्तमं हविः आयुर्वृद्धिकरं नित्यं श्रियं पातु सदैव मे इति प
नवाकं मंत्रपाठः ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनं उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय
मामृतात् इति घृतछाया अथ जातकर्म पुत्रे जाते शीघ्रं पिता पुत्रस्य मुखं विलोक्य सचै
लं स्नायात् अद्येह अमुकोहं पुत्रजननिमित्तकं सचैलं स्नानं करिष्ये इति स्नात्वा पूर्वंग
णेशपूजनं कुर्यात् अद्येह अमुकगोत्रोत्पन्नो अमुकराशिरमुकशर्माहं अमुकगोत्रोत्प
न्नस्य अमुकराशेर्बालकस्य करिष्यमाण जातकर्म कर्मणि निर्विघ्नतासिद्ध्यर्थं श्री
महागणपतेः पूजनं करिष्ये इति गणेशं संपूज्य दक्षिणा अद्येह अमुकोहं अमु
कगोत्रोत्पन्नस्य अमुकराशेर्बालकस्य करिष्यमाण जातकर्मकर्मणि पूर्वांगत्वे

न निर्विघ्नतासिद्ध्यर्थं श्रीमहागणपतेः पूजनकर्मणः सांगतासिद्ध्यर्थं इमां दक्षिणां गण
पतिप्रीतये ब्राह्मणाय दास्ये ॐ तत्सत् प्रधानसंकल्पः अद्येह अमुकोहं अमुकगोत्रोत्प
न्नस्य अमुकराशेर्बालकस्य गर्भांबुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धये बीज
गर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यसंस्कारं करिष्ये तदंगत
या उत्तरोत्तराभ्युदयप्राप्तिकामः सकलमंगलाभिवृद्ध्यर्थं गणपतिसहितगौर्यादिषोडश
मातॄणां यथामिलितोपचारैः पूजनमहं करिष्ये इति सं० मातॄणां पूजनं विधाय वसोर्धाराः पा
तयित्वा अद्येह अमुकोहं अमुकगोत्रोत्पन्नस्य अमुकराशेर्बालकस्य करिष्यमाणजातकर्मक
र्मणि पूर्वांगत्वेन सर्वाभ्युदयार्थं सवेमातॄणां उपरि वसोर्धाराः पातयिष्ये ० वसो० नीराजय ६
हि एग अद्येह अमुकोहं अमुकगोत्रोत्पन्नस्य अमुकराशेर्बालकस्य करिष्यमाणजातकर्मक
र्मणि पूर्वांगत्वेन उत्तरोत्तराभ्युदयप्राप्तिकामः गणपतिसहितगौर्यादिषोडशमातॄ
णां पूजनकर्मणः साद्गुण्यार्थं इमां दक्षिणां ब्राह्मणाय दास्ये ॐ तत्सत् आभ्युदयिक

श्राद्धं कुर्यात् प्रतिज्ञा अद्येह अमुकगोत्राणां अस्मन्मातृपितामहीप्रपितामहीनां अमुकीदेवी २
अमुकीदेवीनां नांदीमुखीनां तथा अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकदेव २
अमुकदेवानां नांदीमुखीनां तथा अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अ
मुकदेव २ अमुकदेवानां सपत्नीकानां अमुकगोत्रोत्पन्नो अमुकराशिरमुकशर्माहं अमुकगो
गोत्रोत्पन्नस्य अमुकराशेर्बालकस्य करिष्यमाणजातकर्मकर्मणि श्रौताग्नेर्भावेन उत्तरोत्तरा
भ्युदयप्राप्त्यर्थं सवसुसंज्ञकविश्वेदेवपूर्वकं सांकल्पविधिना आमान्नेन आभ्युदयिकश्रा
द्धं करिष्ये कुरुष्वेति प्रत्यग्रहवचनं कुर्यात् अद्येह अमुकगोत्रोत्पन्नस्य अमुकराशेर्बालक
स्य करिष्यमाणजातकर्मकर्मणि पूर्वांगत्वेन सकलमंगलाभिवृद्ध्यर्थं ब्राह्मणद्वारा पुण्या
हं वाचयिष्ये तदंगतया चतुर्णां ब्राह्मणानां पूजनपूर्वकं वरणं करिष्ये अथ मेधाजननं ॐ भू
स्त्वयि दधामि ॐ भुवस्त्वयि दधामि ॐ स्वस्त्वयि दधामि ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि ना
मां दधि हरण कर्णे वा जपति ॐ अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करो

राम
१९